सागमाकरपाताहाकंकेनावनतोहिसः ।

न समानर्दमारामालंकाराजस्वसा रतम् ॥ १७ ॥

**पदच्छेदः**

सागमाकरपाता हा कंकेन अवनतः हि सः ।

न समानर्द मा अरामा लंकाराजस्वसा रतं ॥

सागमाकरपाता आगमेन सहिताः सागमाः वेदविदः महर्षयः तेषां आकरः समूहः तस्य पाता रक्षिता । "आकरस्थानखन्यौ वा" इति रत्नमाला । सः रामचन्द्रः कंकेन गृध्रेण जटायुषा अवनतो हि सेवितः किल । अगस्त्याश्रमात् निर्गत्य दण्डकावनतपोधनरक्षको रामभद्रः पंचवट्यां जटायुषा मानितः अभूदिति भावः । तदानीं अरामा अमनोज्ञा । "रामः पशावित्यधिकृत्य सितासितमनोज्ञेषु" इति रत्नमाला । लंकाराजस्वसा लंकाराजः रावणः तस्य स्वसा शूर्पणखा । लंकाराज इति षष्ठ्यन्तं पृथक्पदं वा । रतं संभोगं समानर्द सम्यक् आनर्द ययाचे । न मा इति निषेधौ प्रकृतमर्थं दृढयतः ॥

*प्रातिलोम्येन विरथं पाठः—*

तं रसास्वजराकालंमारामार्दनमासन ।

सहितोनवनाकेकं हातापारकमागसा ॥

पदच्छेदः

तं रसासु अजराकालं मा आरामार्दनं आस न ।
सः हितः अनवनाके अकं हाता अपारकं आगसा ॥

अनवे चिरन्तने नाके स्वर्गेऽपि अपारकं अपारं। स्वार्थे क-प्रत्ययः । अकं दुःखं । "अकं पापे च दुःखे" ति विश्वः । हाता प्राप्तः । हा गतावित्यस्मात् तृन् । सः इन्द्रः रसासु भूमिषु अजराकालं जराकालौ जरामरणे न विद्येते यस्य स तथोक्तः । "कालो नेहा यमो मृत्युरि" ति रत्नमाला । भूमौ अवतीर्णस्यापि हि हरेः जरामरणादि-विकारा न सन्ति । "विजरो विमृत्युरि" ति श्रुतेः । आरामार्दनं आरामस्य नन्दनवनस्य अर्दनं पारिजातोत्पाटनेन भंजकं तं श्रीकृष्णं आर प्राप्तवान् । पूर्वं हरेः मित्रभूतोऽपि शक्रः तत्प्रार्थितपारिजा-ताप्रदानरूपेणापराधेन नाकेऽपि निरवधिकं दुःखं प्राप्य पारिजातोत्पाटनेन नन्दनवनभंजकं अवताररूपेष्वपि जरामरणादिविकारदूरं शौरिं योद्धुकामः प्राप्तवानिति भावः ॥ १७ ॥

*अथानुलोम्येन शूर्पणखानासिकाच्छेदस्य तस्याः राघवे वैरानु-बन्धस्य च प्रतिपादकं, प्रातिलोम्येन च शक्रस्य केशवसंभाषणारंभप्रतिपादकं श्लोकमारचयति —*

**तां स गोरमदोश्रीदो विग्रामसदरोतत ।**
**वैरमासपलाहारा विनासा रविवंशके ॥ १८ ॥**

**पदच्छेदः**

तां सः गोरमदोश्रीदः विग्रां असदरः अतत ।
वैरं आस पलाहारा विनासा रविवंशके ॥

गोरमदोश्रीदः गोरमः भूरमणः रामचन्द्रः तस्य दोष्णोः बाह्वोः श्रीदः संपत्प्रदः । बाहुबलप्रदः सहाय इति यावत् । "रामस्य दक्षिणो बाहुः" इति रामायणम् । सः लक्ष्मणः सदरः सभयः न भवतीति असदरः निर्भयस्सन् तां शूर्पणखां विग्रां विगतनासिकां अतत अकृत । ततः पलाहारा मांसाहारा राक्षसी विनासा विगतनासिका सती रवेः वंशो यस्य सः रविवंशकः तस्मिन् सूर्यवंश-भवे रामे वैरं द्वेषं आस आददे । संभोगार्थिनीं शूर्पणखां श्रीरामसहायभूतो लक्ष्मणः निर्भयस्सन् तां शूर्पणखां विगतनासिकां अकरोत् । तेन नासाहीना कुपिता राक्षसी रामे वैरानुबन्धं कृतवतीति भावः ॥

*प्रातिलोम्येन पाठस्त्वेवम्—*

**केशवं विरसानाविराह्यालापसमारवैः ।**
**ततरोदसमग्राविदोश्रीदोमरगोसताम् ॥**

**पदच्छेदः**

केशवं विरसानाविः आह आलापसमारवैः ।
ततरोदसं अग्राविदः अश्रीदः अमरगः असताम् ॥

विरसानाविः रसः आनन्दः आनः प्राणनं बलं अविः कान्तिः विगताः रसानावयः आनन्दबलकान्तयः यस्य स तथोक्तः। असतां असुराणां अश्रीदः अलक्ष्मीप्रदः अमरान् गच्छतीति अमरगः देवैर्युक्त इति भावः। अग्राविदः अग्रभूताः अवयः पर्वताः तान् द्यति खण्डयतीति तथोक्तः पर्वतच्छेदी शक्रः। "अग्रंपुरःशिखामान-श्रेष्ठाधिकफलादिषु" इति रत्नमाला। ततरोदसं तते कृते रोदसी द्यावापृथिव्यौ येन स तथोक्तः ततरोदसं द्यावापृथिव्यादिस्रष्टारम्। "द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी" त्यमरः। "यथापूर्व-मकल्पयत् दिवं च पृथिवीञ्चान्तरिक्षमथो सुवः" इति श्रुतिः। केशवं कृष्णं आलापसमारवैः समीचीनैः शब्दैः सान्त्ववचनैरिति यावत्। तैर्युक्तस्सन् आह ब्रवीति स्म। असुरविषादकरः देवैर्युक्तोऽपि गोत्रभित् पारिजाताभिलाषप्रबद्धकृष्णस्पर्धया विगतानन्दबलदीप्तिकस्सन् अखिल-लोकस्रष्टारं कृष्णं अनुरूपसान्त्वशब्दोक्तिपूर्वकं समवोचदिति भावः ॥ १८ ॥

*अथानुलोम्येन राघवस्य खरसेनया युद्धप्राप्तिं खरवधेन शोभमानत्वं तेन सकललोकव्यापिकीर्तिमत्वं च प्रदर्शयन्तं, प्रातिलोम्येन दिव्यस्य पारिजातस्य अनुचितं भूतलानयनं मा कुर्वित्येतमर्थं प्रतिपाद-यन्तं श्लोकमारचयति—*

**गोद्युगोमस्स्वमायोभूदश्रीगखरसेनया ।**
**सहसाहवधारोविकलोराजदरातिहा ॥ १९ ॥**

पदच्छेदः

गोद्युगोमः स्वमायः अभूत् अश्रीगखरसेनया ।

सह साहवधारः अविकलः अराजत् अरातिहा ॥

अश्रीगखरसेनया अश्रीगः अलक्ष्मीं गतः यः खरः तन्नामको राक्षसः तस्य सेनया सह समं साहवधारः आहवधारया युद्धधारया सहितः । अविच्छिन्नयुद्धयुक्तः । तथापि अविकलः वैकल्यरहितः स्वमायः अमायः अदम्भः शोभना अमाया यस्य सः स्वमायः । "माया दंभे क्रियायां च" इति रत्नमाला । ईदृशः रामः अरातिहा खरदूषणादिशत्रुहन्ता सन् अराजत् प्रचकाशे । ततः गोद्युगोमः गौश्च द्यौश्च गोद्यावौ गौः पृथिवी द्यौः स्वर्गः द्यावापृथिव्यौ गच्छतीति व्याप्नोतीति गोद्युगा उमा कीर्तिः यस्य सः गोद्युगोमः । "उमा स्यादतसीगौरी हरिद्राकीर्तिकान्तिषु" इति रत्नमाला । अभूत् आसीत् । खरसेनया समं अविच्छिन्नसमरं कृत्वाऽपि अखण्डितगात्रः खरादीन् हत्वा रामो रराज । तेन चतुर्दशसंख्यखरादिराक्षसवधेन सकललोककीर्तिपात्रमासीदिति भावः ॥

*प्रातिलोम्येन त्वित्थं पाठः—*

**हातिरादजरालोकविरोधावहसाहस ।**

**यानसेरखगश्रीद भूयोमास्वमगोद्युगः ॥**

पदच्छेदः

हा अतिरादजरालोकविरोधावहसाहस ।

यानसेरखग श्रीद भूयः मा स्वं अगः द्युगः ॥

अतिराद: अत्यन्तं राद: दातार: ये अजरा निर्जरा: देवा: तेषां आलोक: तेज: तद्विरोधावहं तद्विघातावहं साहसं यस्य स तथोक्त: तत्र संबुद्धिः। कर्मफलदातॄणां देवानां तेजोभंगकरसाहसयुक्तः इत्यर्थः। यानसेरखग इरया वाचा वेदवाचासहित: सेर: वेदमय: खग: गरुत्मान् यानभूतो वाहनभूत: सेर: खग: यस्य स तथोक्त: तस्य संबुद्धि:। श्रीद संपत्प्रद हे कृष्ण त्वं धनभूत: द्युग: नाकगत: अग: वृक्ष: पारिजातवृक्ष: भुवं यातीति भूय: भूलोकगतो माभूत्। देवतेजोभंगकारिपराक्रम, गरुडवाहन, संपत्प्रद, कृष्ण! नाकस्थपारिजातं भूलोकं मानैषी: इति भाव:। हेति खेदे ॥ १९ ॥

*अथानुलोम्येन रघुनन्दने लंकेश्वरस्य विजिगीषाहंकारप्रतिपादकं, प्रातिलोम्येन प्रथमं शोकार्णवे निपतितस्यापि महेन्द्रस्य ततः धैर्यात् जयन्तादीन् प्रति पारिजातापहारिणं कृष्णं गृह्णीध्वमित्यादेशं प्रदर्शयन्तं श्लोकमाह—*

**हतपापचयेहेयो लंकेशोयमसारधीः।**
**राजिराविरतेरापोहाहाहंग्रहमारघः ॥ २० ॥**

**पदच्छेदः**

हतपापचये हेय: लंकेश: अयं असारधी: ।
राजि राविरतेराप: हाहा अहंग्रहं आर घ: ॥

राविरतेराप: अविरतं सन्ततं इरां सुरां पिबन्तीति अविरतेरापा: रा: तीक्ष्णा: अविरतेरापा: राक्षसा: यस्य स तथोक्त:। “र: पावके च

तीक्ष्णे चे " ति विश्वः । घः घोरः । " घोरे तु घस्त्रिष्वि " ति रत्नमाला । असारधीः निस्सारबुद्धिः हेयः कुत्स्यः अयं लंकेशः रावणः हतपापचये पापानां खरादीनां राक्षसानां च यो गणः हतो येन स तथोक्तः । तस्मिन् राजि राजनि रामचन्द्रे । राट् शब्दोऽयम् । अहंग्रहं अहंबुद्धिं जेष्यामीत्याग्रहं आर प्राप ॥

*प्रातिलोम्येन पाठस्तु—*

**घोरमाहग्रहंहाहापोरातेरविराजिराः ।**
**धीरसामयशोकेऽलं यो हेये च पपात ह ॥**

**पदच्छेदः**

घोरं आह ग्रहं हाहापः अरातेः रविराजिराः ।
धीरसामयशोके अलं यः हेये च पपात ह ॥

रविराजिराः रविरिव सूर्य इव राजते शोभते इति तादृशी राः सुवर्णः यस्य स तथोक्तः । सूर्यप्रकाशभूषणादिरूपसुवर्णशालीत्यर्थः । यः हाहापः हाहाशब्दः हूहूप्रभृति सर्वगन्धर्वोपलक्षणार्थकः । हाहां पाति रक्षतीति हाहापः इन्द्रः हेये कुत्स्ये धीरसस्य ज्ञानानन्दस्य आमयभूते व्याधिभूते शोके दुःखे पारिजातापहारजन्ये अलं अत्यन्तं पपात । ह इति प्रसिद्धौ । चकारः उभयसमुच्चयार्थः । सः इन्द्रः घोरं भयंकरं अरातेः कृष्णस्य ग्रहणं आह उवाच । जयन्तादीन् प्रतीति शेषः ॥ २० ॥

अथानुलोम्येन रामस्य मारीचवधेन शोभमानत्वं बोधयत् सीतायाः लक्ष्मणसहायरहितस्थानवासित्वं च प्रतिपादयत्, प्रातिलोम्येन पारिजातं हृत्वा स्वर्गे सञ्चरता प्रद्युम्नयुक्तेन कृष्णेन सह इन्द्रस्य सञ्चाराक्षमतां च प्रतिपादयत् पद्यमाह—

ताटकेयलवादेनोहारीहारिगिरासस: ।
हासहायजनासीतानाप्तेनादमनाभुवि ॥ २१ ॥

**पदच्छेदः**

ताटकेयलवात् एनोहारी हारिगिरा आस सः ।
हा असहायजना सीता अनाप्तेना अदमनाः भुवि ॥

हारिण्या मनोहारिण्या गिरा स्वनामरूपया वाचा एनोहारी पापहरः । रामनामोच्चारणेन रामस्य तदुच्चारयितृपापहरत्वं हि प्रसिद्धम् । सः रामः ताटकेयलवात् ताटकेयस्य मारीचस्य लवात् च्छेदात् आस दिदीपे । "लवो रामसुते लेशे च्छेदनेऽपि च" इति रत्नमाला । अनन्तरं भुवि स्वस्थाने अनाप्तेना अनाप्तः अप्राप्तः इनः नाथः यया सा तथोक्ता स्वस्थाने रामसंनिधान-रहितेत्यर्थः । अदमनाः अदं क्षान्तिरहितं मनः यस्याः सा तथोक्ता । हन्यमानमारीचशब्दे काकुत्स्थार्तिध्वनित्वभ्रान्त्या तच्छ्रवणमसह-मानेत्यर्थः । "दा स्त्रियां क्षान्तिदानयोः" इति रत्नमाला । सीता असहायजना सहायजनरहितेत्यर्थः । जातेत्यर्थः । हा शब्दः एकाकिन्याः विजने वने अवस्थानं अनुचितमिति द्योतयति ॥

प्रतिलोमपाठस्तु—

विभुनामदनाप्तेनातासीनाजयहासहा ।
ससरागिरिहारीहानोदेवालयकेटता ॥

**पदच्छेदः**

विभुना मदनाप्तेन आत आसीनाजयहासहा ।
सः सराः गिरिहारी हा नो देवालयके अटता ॥

आसीनाजयहासहा आसीनः स्ववाहने उपविष्टः अजयः जयस्य जयन्तस्य विरोधी प्रद्युम्नः "जयो जयन्ते विजये जया दुर्गाग्निमंथ्ययोः" इति विश्वः । तस्य हासं युद्धाट्टहासं हन्तीति आसीनाजयहासहा वाहरूढजयन्तप्रतिस्पर्धिप्रद्युम्नरणाट्टहासं शरवर्षेण निराकृतवानित्यर्थः । सराः ससंपत्कः गिरिहारी गिरीन् पर्वतादीन् हरति प्रहरतीति तथोक्तः सः इन्द्रः देवालय एव देवालयकः तस्मिन् त्रिदशालये अटता परिभ्रमता स्वर्गं प्रदक्षिणीकुर्वता मदनाप्तेन प्रद्युम्नाश्रितेन विभुना श्रीकृष्णेन सह नो आत नातति स्म । अत सातत्यगमने इत्यस्माल्लिट् । गिरिपक्षच्छेदकोऽपि जयन्तजित्प्रद्युम्नाट्टहासनिवारकोऽपि शक्रः स्वर्गं परितः संचरन्तं प्रद्युम्नाश्रितं श्रीकृष्णं अनुगन्तुं शक्तो नाभूत् इति भावः ॥ २१ ॥

*अथानुलोम्येन रावणेन सीता हृतेति प्रतिपादयन्तं, प्रातिलोम्येन स्वमित्रभूतप्रवराख्यब्राह्मणाप्यायिततेजसा शक्रेण प्रद्युम्नतेजोभंगः कृत इति प्रदर्शयन्तं श्लोकमाह—*

भारमाकुदशाकेनाशराधीकुहकेनहा ।
चारुधीवनपालोक्या वैदेहीमहिताहृता ॥ २२ ॥

पदच्छेदः

भारमा कुदशाकेन आशराधीकुहकेन हा ।
चारुधीवनपालोक्या वैदेही महिता हृता ॥

भारमा भासा लक्ष्मीः सीतायाः लक्ष्म्यभेदेऽपि मानुषावतारत्वं अवलंव्य भेदव्यपदेशः । रामस्य विष्ण्वभेदेऽपि "विष्णुना सदृशो वीर्ये" इति भेदव्यपदेशवत् । चारुधीवनपालोक्या चारुधियः सुबुद्धयः ये वनपाः वनरक्षकाः देवाः तैः आलोक्या अवलोकितुं योग्या । वनदेवता-मात्रसाक्षिकेति यावत् । महिता पूजिता वैदेही जानकी कुदशाकेन कुत्सितावस्थाकेन सीताहरणोद्योगात् आयुषः क्षयदुर्दशा जातेति भावः । आशराधीकुहकेन आशरेण राक्षसरूपेण अधीकुहकेन अबुद्धिना वञ्चकेन । "क्रव्यादोऽस्रप आशरः" इत्यमरः । वञ्चनार्थं संन्यासिरूपं धृतवता रावणेन हृता गृहीता । हा कष्टम् ॥

प्रतिलोमपाटस्तु—

ताहृताहिमहीदेवैक्यालोपानवधीरुचा ।
हानकेहकुधीराशनाकेशादकुमारभाः ॥

पदच्छेदः

ताः हृताः हि महीदेवैक्यालोपानवधीरुचा ।
हानकेहकुधीराशनाकेशा अदकुमारभाः ॥

महीदेवस्य मित्रभूतस्य प्रवराख्यस्य ब्राह्मणस्य ऐक्येन सौहार्देन। रामसुग्रीवयोरैक्यमितिवत्। अलोपे नाशरहिते अनवधीरुचौ चिरन्तन प्रज्ञातेजसी यस्य स तथोक्तः तेन। इन्द्रस्य सखा कश्चित् प्रवरनामा ब्राह्मणः समागत्य श्रीकृष्णशरघातविषण्णस्य शक्रस्य यथा निस्संज्ञता निस्तेजस्कत्वं च न भवति तथा स्वयं साहाय्यकं आचरितवानिति हरिवंशे प्रसिद्धम्। हानकेहकुधीराशनाकेशा हानमेव हानकं युद्धत्यागः तस्मिन् ईहा इच्छा येषां ते तथोक्ताः तादृशाः ये कुधीराः धीराभासाः तेषु आशा रक्षणेच्छा यस्य स तथोक्तः तेन नाकेशा स्वर्गनाथेन शक्रेण। ईट् शब्दोऽयं तृतीयान्तः। शरघातभीत्या युद्धं त्यक्तवा पलायनोद्युक्तानां कुत्सित धैर्यबलवतां देवानां रक्षणं चिकीर्षता स्वर्गेश्वरेणेत्यर्थः। ताः प्रसिद्धाः अदकुमारभाः अदस्य क्षान्तिरहितस्य कुमारस्य प्रद्युम्नस्य भाः दीप्तयः हृता हि अपहृताः खलु ॥ २२ ॥

*अथानुलोम्येन रामचन्द्रस्य सीतावियोगिनः हनूमत्समागमं सुग्रीवस्य राज्यभ्रष्टस्य दुर्बलस्य रामप्राप्तिं च दर्शयन्तं, प्रातिलोम्येन च शक्रेण युधि तेजोभंगं प्रापितस्य प्रद्युम्नस्य पुनः क्षणादेव तेजोलाभं शत्रुघातित्वं च प्राप्तवतः शरघातश्रमहरशीतवातशालिनभोदेशाकलनं च प्रतिपादयन्तं श्लोकमाह—*

हारितोयदभोरामावियोगेनघवायुजः ।
तंरुमामहितोपेतामोदोसारज्ञरामयः ॥ २३ ॥

पदच्छेदः

हारितोयदभः रामावियोगे अनघवायुजः ।
तं रुमामहितः अपेतामोदः असारज्ञः आम यः ॥

हारी मनोहारी तोयदः मेघः तस्य भेव भा यस्य सः हारितोयदभः मनोहरमेघप्रभः रामावियोगे सीताविश्लेषे सति अनघवायुजः अनघः निर्दोषः वायुजः हनूमान् यस्य स तथोक्तः सीताविश्लेषानन्तरं हनुमता संगतो जातः इत्यर्थः । तं रामं असारज्ञः सारो बलं ज्ञः कीर्तिः तौ न विद्येते यस्य स तथोक्तः । " ज्ञः कीर्त्यां संगर " इति रत्नमाला । दुर्बलत्वेन वालितः पराजयं प्राप्तः सुग्रीवः विगतयशा इति भावः । अत एव अपेतामोदः व्यपगतसंतोषः रुमामहितः रुमाख्यया स्त्रिया महितः पूज्यः रुमाभर्ता सुग्रीव इति यावत् । आम प्राप्तवान् । " आम गत्यादिषु " इत्यस्माल्लिट् ॥

प्रतिलोमपाठस्तु—

योमराज्ञरसादोमोतापेतोहिममारुतम् ।
जोयुवाघनगेयोविमाराभोदयतोरिहा ॥

पदच्छेदः

यः अमराज्ञः असादोमः अतापेतः हिममारुतं ।
जः युवा घनगेयः विं आर आभोदयतः अरिहा ॥

यः युवा प्रद्युम्नः अमराज्ञः अमरैः देवैः सह अज्ञः अयुद्धं यस्य स तथोक्तः देवैः सह युद्धरहितो जात इत्यर्थः । अत्र ज्ञशब्दः

संगरवाची । स एव हिममारुतं हिमाः शीतलाः मारुताः वाताः यस्मिन् स तथोक्तः तं विं आकाशं । " विश्चक्षुपि व्योम्नि पाते परमात्मनि पक्षिणि " इति रत्नमाला । आर प्राप्तवान् । तदनन्तरं अतापेतः तापेन इतः प्राप्तः न भवतीति तथोक्तः । आभोदयतः तेजसः उदयतः प्रादुर्भावात् अरिहा शत्रुहन्ता जः जेता सन् । " जो जये विजये मेरौ शब्दे जेतरि मत्सर " इति रत्नमाला । असादोमः असादा अनवसादा उमा कीर्तिः यस्य स तथोक्तः । अतएव घनगेयः प्रौढैः स्तुत्यो जातः । प्रथमं इन्द्रशरघातेन विसंज्ञत्वात् क्षणं अमरैः सह युद्धरहितोऽपि पुनः शीतवातायुतवियदाकलनया निरस्ततापः पुनः तेजोदयेन शत्रून् हत्वा अनवसन्नकीर्तिः सन् प्रौढानां स्तुतिविषयः बभूवेति भावः ॥ २३ ॥

*अथानुलोम्येन रामोऽपि वालिवधं कृतवान् इत्येतमर्थं प्रदर्शयन्तं, प्रातिलोम्येन कृष्णो वासवशरार्दितवैनतेयरक्षणं कृतवानित्येतमर्थं प्रदर्शयन्तं श्लोकमाह—*

**भानुभानुतभावामासदामोदपरोहतं ।**
**तंहतामरसाभाक्षोतिरातावृत्तवासविम् ॥ २४ ॥**

**पदच्छेदः**

भानुभानुतभाः वामासदामोदपरः हतं ।
तं ह तामरसाभाक्षः अतिराता अकृत वासविम् ॥

भानुभानुतभाः सूर्यतेजसा नुता स्तुता भा दीप्तिः यस्य स तथोक्तः । सूर्यतेजोऽधिकतेजस्कः इत्यर्थः । वामायाः स्त्रियः सीतायाः

सदामोदपरः समीचीनानन्दजननतत्परः । "रामा वामा वामनेत्रा पुरन्ध्री" इति हलायुधः । अतिराता अत्यन्तं राता दाता तामरसस्य आभेवाभा ययोः ते तामरसाभे तथाभूते अक्षिणी यस्य सः तामरसाभाक्षः रामः तं प्रसिद्धं वासविं वासवस्य अपत्यं पुमान् वासविः तं इन्द्रपुत्रं वालिनं हतं अकृत जघानेत्यर्थः । ह शब्दः पादपूरणे । "ह स्यात् संबोधने पादपूरणे नाव्ययं शिव" इति विश्वः ॥

*प्रतिलोमपाठस्तु—*

**विंसवातकृतारातिक्षोभासारमताहतं ।**
**तंहरोपदमोदासमावाभातनुभानुभाः ॥**

**पदच्छेदः**

विं सः वातकृतारातिक्षोभासारमताहतं ।
तं हरोपदमः दासं आव आभातनुभानुभाः ॥

आभया कान्त्या तन्वी लघ्वी भानुभाः सूर्यकान्तिः यस्य स तथोक्तः तेजसा लघूकृततपनदीप्तिरिति यावत् । न तत्र सूर्यो भातीति श्रुतिः । हरोपदमः शिवस्य निग्राहकः बाणाहवव्याहतशंभुशक्तिरित्यर्थः । सः कृष्णः वातेन पक्षपवनेन कृतानि अरातीनां शत्रूणां क्षोभासारमताहतानि येन सः वातकृतारातिक्षोभासारमताहतः क्षोभं संचलनं असारः बलाभावः मताहतं अभिमतहानिः पक्षवातेनैव परिपन्थिनां क्षोभं दौर्बल्यं अभिमतार्थहानिं च कुर्वन्तमित्यर्थः । तं दासं विं पक्षिणं गरुडम् । दासस्सखावाहनमासनं ध्वज इत्याद्यभियुक्तोक्तेः । आव ररक्ष ॥ २४ ॥

अथ वालिवधानन्तरं श्रीरामचन्द्रस्य रावणवधोदर्कजयलक्ष्मी-प्राप्ति ततस्सुग्रीवसेनालाभप्रयुक्ततेजोतिशयसिद्धिं च आनुलोम्येन प्रति-पादयन्तं, समरश्रान्तपक्षिराजरक्षणकत्वेन उक्तस्य कृष्णस्य शक्रपराभवोप-युक्तजयलक्ष्मीसिद्धिं प्रातिलोम्येन दर्शयन्तं श्लोकमाह—

**हंसजारुद्धबलजापरोदारसुभाजनि ।**
**राजिरावणरक्षोरविघातायरमारयम् ॥ २५ ॥**

**पदच्छेदः**

हंसजारुद्धबलजा परोदारसुभा अजनि ।
राजि रावणरक्षोरविघाताय रमा आर यं ॥

यं श्रीरामं रावणरक्षोरविघाताय रावणाख्यरक्षसः रं शिरः तस्य विघाताय च्छेदाय । "रं क्लीबे रुधिरे मूर्ध्नि" इति रत्नमाला । रमा जयलक्ष्मीः आर प्राप्तवती तस्मिन् राजि राज्ञि रामे हंसजारुद्ध-बलजा हंसजस्य सूर्यपुत्रस्य सुग्रीवस्य । "भानुर्हंसस्सहस्रांशुः" इत्यमरः । अरुद्धबलजा अप्रतिहतसेनाजन्या परोदारसुभा परमोत्कृष्ट-शोभनदीप्तिः अजनि बभूव । वालिवधेन जयलक्ष्मीं प्राप्तवति सति सुग्रीवानीकलाभप्रयुक्तं परभीकरं परमोत्कृष्टं तेजः समजनीति भावः ॥

प्रतिलोमपाठस्तु—

**यंरमारयताघाविरक्षोरणवराजिरा ।**
**निजभासुरदारोपजालबद्धरुजासहम् ॥**

पदच्छेदः

यं रमा आर यताघा विरक्षोरणवराजिरा ।
निजभा सुरदा रोपजालबद्धरुजासहं ॥

रोपजालेन बाणसमूहेन । "बाणो रोप इषुर्द्वयोः" इत्यमरः । बद्धा रुजा वेदना तत्सहिष्णुं विक्षिप्तशरनिकरप्रयुक्तदुःखसहिष्णुं यं श्रीकृष्णं यताघा व्यपगतदोषा विरक्षः विगतराक्षसं रणवराजिरं युद्धश्रेष्ठांकणं यया सा विरक्षोरणवराजिरा निजा अविनाशिनी भा दीप्तिः यया सा तथोक्ता । "निजौ स्वीयाविनाशिनौ" इति रत्नमाला । सुरदा सुरान् देवान् द्यति खण्डयतीति तथोक्ता रमा जयलक्ष्मीः आर प्राप । सः गरुत्मन्तं ररक्षेति पूर्वेणान्वयः ॥ २५ ॥

*अथानुलोम्येन सागरमतिक्रम्य सीतां दृष्ट्वा पुनरायान्तं हनूमन्तमासाद्य रघुवीरः सह्यमलयपर्वतान् समुद्रवेलां च प्राप्तस्सन् रराजेति वर्णयन्तं, प्रातिलोम्येन श्रीकृष्णः प्रद्युम्नाद्यपराधेन शक्रं प्रति नितरां कुपितः तज्जयं लब्ध्वा तेजोतिशयशाली सन् पारिजातं दृढं जग्राहेति संदर्शयन्तं श्लोकमाह—*

**सागरातिगमाभातिनाकेशोसुरमासहः ।**
**तंसमारुतजंगोप्ताभादासाद्यगतोगजम् ॥ २६ ॥**

पदच्छेदः

सागरातिगं आभातिनाकेशः असुरमासहः ।
तं सः मारुतजं गोप्ता अभात् आसाद्य गतः अगजं ॥

आभातिनाकेशः आभया दीप्त्या अतिनाकेशः शक्रमतिक्रान्तः । इन्द्राभ्यधिकतेजस्क इत्यर्थः । असुरमा दानवलक्ष्मीः तदसहः । असुरसंपदसहिष्णुः इत्यर्थः। गोप्ता सर्वपालकः सः रामः सागरातिगं सागरं अतिलंघितवन्तं प्रसिद्धं मारुतजं वायुसूनुं आसाद्य प्राप्य अगजं अगाश्च जा च अगजं द्रव्यदैवतमितिवत् समाहारद्वन्द्वः । अगाः सह्यादि-शैलाः जा सागरवेला । "जास्त्रियां देववाहिन्यां योनिसागरवेलयोः" इति रत्नमाला । शैलान् सागरवेलां च गतस्सन् अभात् अराजत् ॥

*प्रतिलोमपाठस्तु—*

**जंगतोगद्यसादाभाप्तागोजंतरुमासतं ।**
**हस्समारसुशोकेनातिभामागतिरागसा ॥**

**पदच्छेदः**

जं गतः गदी असादाभाप्ता गोजं तरुं आस तं ।
हः समारसुशोकेन अतिभामागतिः आगसा ॥

मारस्य प्रद्युम्नस्य सुशोकः अतिखेदः तेन सहितं समारसुशोकं तेन आगसा अपराधेन । प्रद्युम्नदुःखप्रयुक्तेन शरार्पणादिरूपेण शक्रस्यापराधेन अतिभामागतिः अतिमात्रक्रोधागमः । "भामः क्रोधे रवौ दीप्तौ" इति रत्नमाला । गदी गदावान् जं विजयं । "जो जये विजये" इति रत्नमाला । गतः प्राप्तः । असादाभाप्ता असादां

अवसादरहितां आभां दीप्तिं आप्ता प्राप्ता हः हरिः गोजं स्वर्गप्रभवं। "स्वर्गेषु पशुवाग्वज्र दिङ्नेत्रघृणिभूजले" इत्यमरः। तं तरुं पारिजातं आस जग्राह ॥ २६ ॥

अथानुलोम्येन सेतुमार्गेण सागरे गच्छन्त्याः वानरसेनायाः संरक्षको रामः रराजेति प्रतिपादयत्, प्रातिलोम्येन गृहीतपारिजातं कृष्णं सेवाकृतां शत्रुजयप्रदत्वेन तद्विमुखानां शत्रुभयप्रदत्वेन वर्णयत् पद्यं ग्रध्नाति —

**वीरवानरसेनस्य त्राताभादवता हि सः।**
**तोयधावरिगोयादस्ययतोनवसेतुना ॥ २७ ॥**

**पदच्छेदः**

वीरवानरसेनस्य त्राता आभात् अवता हि सः।
तोयधौ अरिगोयादसि अयतः नवसेतुना ॥

सः रामः अरिगोयादसि गाश्च यादांसि जलानि जलजन्तवश्च अरीणि अक्षयाणि गोयादांसि यस्य सः तस्मिन्। "रिशब्दस्तु ध्रुवे क्षये" इति रत्नमाला। तोयधौ समुद्रे अवता रक्षता प्रतिबन्धेभ्यो रक्षणं कुर्वता नवसेतुना अयतः गच्छतः वीरवानराणां सेना वीरवानरसेनं तस्य। "विभाषा सेनासुराच्छायाशालानिशानां" इति सेनाशब्दस्य क्लीबता। त्राता सन् रक्षिता सन् आभात् बभासे। हि प्रसिद्धौ ॥

प्रतिलोमपाठस्तु—

नातुसेवनतोयस्यदयागोरिवधायतः ।
सहितावदभातात्रास्यनसेरनवारवी ॥

पदच्छेदः

ना तु सेवनतः यस्य दयागः अरिवधायतः ।
सः हि तावत् अभाता त्रासी अनसेः अनवारवी ॥

ना तु मनुष्यस्तु यस्य कृष्णस्य सेवनतः सेवया स्तोत्रादिरूपया सेवया यस्य दयागः कृपां प्राप्तस्सन् अरिवधेन शत्रुवधेन आयतः विस्तीर्णः अभिवृद्धः इति यावत् । अनवारवी नवारवः स्तवरूपशब्दः अस्यास्तीति नवारवी स न भवतीति अनवारवी कृष्णविषयकस्तोत्रशब्द-रहितः सः ना अनसेः असिरहितादपि त्रासी भीतिमान् सन् किमुत खड्गयुक्तशत्रोरिति भावः । अभाता हि प्रकाशहीनः खलु । यस्य सेवकः शत्रुवधेन वर्धते यद्विषयकस्तोत्रस्य अकर्ता तु निरायुधादपि शत्रोः त्रस्यन् न प्रकाशते सः कृष्णः पारिजातमग्रहीत् इति पूर्वेणान्वयः ॥ २७ ॥

*अथानुलोम्येन उदग्रविक्रमशाली रावणप्राणहरणं कृत्वा सीता-मनुप्राप्य स्वाश्रितविभीषणखेदहरो रामः सर्वदैवतैः पूजितः इति प्रतिपादयन्तं, प्रातिलोम्येन श्रीकृष्णः शत्रुभंगमारचय्य जयशीलः सकलैः स्तूयमानः पुनरवनीमवापेति प्रत्याययन्तं श्लोकमाह—*

हारिसाहसलंकेनासुभेदीमहितोहिसः ।
चारुभूतनुजोरामोरमाराधयदार्तिहा ॥ २८ ॥

**पदच्छेदः**

हारिसाहसलंकेनासुभेदी महितः हि सः ।
चारुभूतनुजः रामः अरं आराधयदार्तिहा ॥

हारिसाहसः मनोज्ञविक्रमः यः लंकेनः लंकायाः इनः स्वामी रावणः तस्य असुभेदी प्राणनाशकः अनन्तरं चारुः मनोज्ञा भूतनुजा सीता यस्य सः चारुभूतनुजः अरं द्रुतं आराधयदार्तिहा पूजयतः विभीषणस्य आर्तिहा खेदहरः सः रामः महितो हि सर्वदैवतैः पूजितः खलु ॥

*प्रतिलोमपाठस्तु—*

हार्तिदायधरामारमोराजोनुतभूरुचा ।
सहितोहिमदीभेसुनाकेलंसहसारिहा ॥

**पदच्छेदः**

हा आर्तिदाय धरां आर मोराः जः नुतभूः रुचा ।
सः हितः हि मदीभे सुनाके अलं सहसा अरिहा ॥

आर्तिं द्यति खण्डयतीति आर्तिदः युद्धजन्यस्वखेदहरः प्रद्युम्नः सात्यकिर्वा तस्मै हितः हितयोगे चतुर्थी मदीभे मदी मदयुक्तः इभः ऐरावतः गजः यस्य सः मदीभः तस्मिन् सुनाके शोभने स्वर्गे अलं अत्यन्तं सहसा वेगेन अरिहा शत्रुभञ्जकः अत एव जः जेता नुतभूः नुतं नुतिः तस्य भूः स्थानं सर्वेषां स्तोत्रस्थानभूतः । रुचा तेजसा

मोराः माः लक्ष्मीः उरसि यस्य सः मोराः सः कृष्णः धरां भूमिं आर प्राप्तवान् हि ॥ २८ ॥

*अथानुलोम्येन रामचन्द्रस्य अयोध्याप्राप्तिं, प्रातिलोम्येन श्रीकृष्णस्य द्वारकाप्रवेशं च प्रतिपादयन्तं श्लोकमाह—*

**नालिकेरसुभाकारागारासौसुरसापिका ।**
**रावणारिक्षमेरापूराभेजे हि ननामुना ॥ २९ ॥**

**पदच्छेदः**

नालिकेरसुभाकारागारा असौ सुरसापिका ।
रावणारिक्षमेरा पूः आभेजे हि न न अमुना ॥

नालिकेरैः नालिकेरवृक्षैः सुभाकाराणि शोभनप्रान्तभाकृतीनि अगाराणि यस्यां सा नालिकेरसुभाकारागारा सुरसापिका सुरसस्य शोभनरागस्य आपिका प्रापिका स्पृहणीयेति यावत् । रावणारिक्षमेरा रावणारेः दशकण्ठशत्रोः क्षमा उचिता इरा भूमिः स्थानं यस्याः सा तथोक्ता रामचन्द्रनिवासार्हक्षितिमतीत्यर्थः । असौ पूः अयोध्यापुरी अमुना रामचन्द्रेण आभेजे हि सेविता खलु । द्वौ नञौ प्रकृतमर्थं द्रढयतः ॥

*प्रतिलोमपाठस्तु—*

**नामुनानहिजेभेरापूरामेक्षरिणावरा ।**
**कापिसारसुसौरागाराकाभासुरकेलिना ॥**

**पदच्छेदः**

न अमुना न हि जेभेरा पूः आमे अक्षरिणा वरा ।
का अपि सारसुसौरागा राकाभासुरकेलिना ॥

जेभेरा जाः जेतारः इभाः गजाः यस्यां सा जेभा इरा भूमिः यस्याः सा जेभेरा जयशीलगजयुक्तभूमिकेत्यर्थः । वरा श्रेष्ठा कापि पूः द्वारकापुरी अक्षरिणा धर्मवता। "अक्षरं प्रणवे धर्मे" इति रत्नमाला। राकाभासुरकेलिना राकासु नवरजोनारीषु गोपीषु भासुरा केलिः लीला यस्य स तथोक्तः। "राका नवरजोनार्यां पूर्णचन्द्रतिथावपि" इति रत्नमाला। अमुना श्रीकृष्णेन सारसुसौरागा सती सारः परमशोभनः सौरागः सुरसंबन्धी वृक्षः पारिजातः यस्यां सा तथोक्ता सती आमे हि जग्मे हि। श्रीकृष्णः द्वारकां पारिजातवतीं कुर्वन्नेव विवेशेति भावः ॥ २९ ॥

*अथानुलोम्येन रामचन्द्रप्रवेशानन्तरं अयोध्याभूमेः महालक्ष्मीप्राप्तिं रामस्य राज्यसिद्धिं च कथयन्तं, प्रातिलोम्येन सत्यभामागृहांकणस्य पारिजातस्थानत्वं सत्यभामायाः पारिजातकुसुमधारणेन अत्यद्भुतकान्तिसंपत्कृष्णरुक्मिणीविषयरोषनिवृत्तिसमीचीनज्ञानादिसिद्धिं च सूचयन्तं श्लोकं आह—*

**साग्र्यतामरसागारामक्षामाघनभारगौः ।**
**निजदेपरजित्यास श्रीरामे सुगराजभा ॥ ३० ॥**

**पदच्छेदः**

सा अग्र्यतामरसागारां अक्षामा घनभा आर गौः ।
निजदे अपरजिति आस श्रीः रामे सुगराजभा ॥

रामप्रवेशानन्तरं सा गौः। अयोध्याभूमिः "गौर्नाके वृषभे चन्द्रे

वाग्भूदिग्धेनुषु स्त्रियां" इति रत्नमाला। अक्षामा अकृशा घनभा अतिदीप्तिश्च सती अग्र्यतामरसागारां अग्र्यां उत्तमां तामरसं पद्मं अगारं गृहं यस्याः सा तामरसागारा लक्ष्मीः तां आर प्राप्तवती। निजदे स्वरूपप्रदे अपराजिति रावणादिशत्रुजेतरि रामे सुगराजभा सुगा राजभा राजदीप्तिः यस्याः सा तथोक्ता राज्येन हि राजतेजस्सुगमं भवति। श्रीः राज्यमयी संपत् आस बभूव॥

*प्रतिलोमपाठस्तु—*

**भाजरागसुमेराश्रीसत्याजिरपदेजनि।**
**गौरभानघमाक्षामरागासारमताग्र्यसा॥**

**पदच्छेदः**

भा अजरागसुमेरा श्रीसत्याजिरपदे अजनि।
गौरभा अनघमा क्षामरागा सा अरमत अग्र्यसा॥

अजरागः अजराणां निर्झराणां अगः पारिजातः तस्य सुमानि पुष्पाणि इरा स्थानं यस्याः सा अजरागसुमेरा पारिजातकुसुमनिष्ठा भा दीप्तिः श्रीसत्याजिरपदे श्रीसत्यायाः श्रीमत्याः सत्यभामायाः अजिरपदे अंकणपदे स्थाने अजनि अजायत। पारिजातकुसुमदीप्तिः अत्यद्भुता सत्यभामांकणे प्रससारेति तदंकणे पारिजातः कृष्णेन स्थापित इति व्यज्यते। तेन सा सत्यभामा गौरभा पूर्वापेक्षया अधिकतद्गौरकान्तिः अनघमा निर्दोषसंपत्का क्षामः क्षीणः रागः मात्सर्यं यस्याः सा क्षामरागा पारिजातानयनेन नारददत्ततत्कुसुमग्राहिण्यां रुक्मिण्यां तद्दातरि

कृष्णे प्ररूढं मात्सर्यं उज्झितवतीति भावः। "रागोऽनुरागे मात्सर्यं" इति रत्नमाला। अग्र्यसा अग्र्यं श्रेष्ठं सं ज्ञानं यस्याः सा। "सं क्लीबे स्यन्दनपथे ज्ञाने ध्याने निवारणे" इति रत्नमाला। समीचीनविवेकवती च सती अरमत कृष्णेन साकं क्रीडति स्म ॥ ३० ॥

॥ श्री रामकृष्णाभ्यां नमः ॥

श्रीमद्राघवयादवाकृतिधरश्शेषाचलोत्तंसकः
श्रेयोहेतुमचीकरत्कृतिमिमां श्रीशो मया दुष्कराम्।
तस्मादत्र पवित्रमाधवकथास्वादोन्मिषत्कौतुकाः
सन्तस्साधु वितन्वतां गुणविदः श्लाघ्याममोघादराः ॥

इति श्रीमद्वादिहंसाचार्यावतंसवाजपेयसर्वप्रतिष्ठाप्तोर्यामादियाजिश्रीनिवास-तनूभवस्य श्लेषयमकचक्रवर्तिनः रघुनाथाचार्ययज्वनः तनयेन काञ्चीनगर-वास्तव्येन श्रीवेङ्कटाचार्ययज्वना विरचितं राघवयादवीयचरितं सव्याख्यानं संपूर्णम् ॥

---

रघुनाथसूनुचरितानुवर्णिनी रघुनाथसूरिचरितानुवर्णितः।
इह वेङ्कटार्यकविना सटीकया सहितो समाप्तिमहिताघया कृतिः ॥

जानकीरुक्मिणीरूपा कमला कमलानना।
देवो वा रामकृष्णात्मा दम्पती संपदेऽस्तु नः ॥

॥ श्री सीतारुक्मिणीसमेत श्री रामकृष्णाभ्यां नमः ॥

॥ श्रियै नमः ॥

---

# SRI RAGHAVA-YADAVEEYAM

## THE SUBSTANCE OF SLOKAS

1. I pay my obeisance to Lord Sri Rama, who with his heart pining for Sita, travelled across the Sahyadri Hills and returned to Ayodhya after killing Ravana and sported with his consort, Sita, in Ayodhya for a long time.

*(Reverse)*

I bow to Lord Sri Krishna, whose chest is the sporting resort of Sri Lakshmi; who is fit to be contemplated through penance and sacrifice, who fondles Rukmani and his other consorts and who is worshipped by the Gopikas, and who is decked with jewels radiating splendour.

2. On the earth was the city Ayodhya, named otherwise as Saketa, foremost among the famous cities, was the place of abode of King Dasaratha, son of King Aja, which city was invincible even by the Gods, which displayed the pageantry of the Gods, who had assembled to partake the oblations offered in the sacrifices conducted there, which city was shining with all splendour with the Brahmins and merchant community.

*(Reverse)*

The city Dwaravathi, noteworthy among the cities, was in the midst of water, that city which

abounded in horses and elephants, which was the battle ground of the debating erudite scholars, which city had as her master, Sri Krishna, whose consort was Radha and which city was the greatest of the seats of learning.

3. The city of Ayodhya abounded in huge mansions, which were the repository of immense wealth and splendour, deep wells and the cooing sounds of the Sarasa birds. The city was full of people, who were filled with a deep sense of love and affection.

(*Reverse*)

The raised pials in the houses of Dwaraka were filled with Brahmins. There were many huge lotuses and impeccable mansions. The City 'Dwaraka' which was indescribable, was in the midst of mango groves.

4. Ayodhya, interspersed with clusters of trees and mansions, had not seen the light of stars. It was full of festivities and joy. It warded off all sins. In its splendour, it equalled the Sun. The majestic lustre in the form of Rama pervaded its whole atmosphere.

(*Reverse*)

The liberal hearted Sri Krishna, the Lord of the Yadavas, the source of all light, the Lord of cows, the repository of unbounded splendour, was the protector of Dwaraka.

5. The great Sage Viswamitra, son of Gadhi, desirous of unfettered performance of sacrifices,

secured the aid of the protector of sacrifices (viz: the calm and famous Sri Rama) from the destructive elements.

(*Reverse*)

The famous sage Narada, the greatest among the Brahmins, and who instils a sense of courage among the warriors and who is a great musician approaches singing, Sri Krishna, who is born for the welfare of the mankind and the world.

6. Sita, whose words are a source of immense joy, who is equal to Mother Earth, who is compassionate to those who bow before her, who was born out of the earth, obtained (married) Sri Rama, who was possessing a graceful splendour and was the consort of Lakshmi, and had taken the human form.

(*Reverse*)

Lakshmi, born as the daughter of a king, was married to Sri Krishna. Rukmani (Goddess Lakshmi in the human form), who is the protector of the Gods, and who is free from all faults and the bride of Sri Krishna, took the resplendent flower Parijatha from Sri Krishna, given by the Sage Narada.

7. Sri Rama, who was glowing with a lustre like that of the Sun, but at the same time was easily approachable, who always sympathised with the woebegotten, who vanquished the demons harassing the sages, who was endowed with all the wealth, became kind-hearted when Parasurama, son of Renuka, bowed before him.

Satyabhama, who was slighted by Krishna's fault (of giving the flower to Rukmani).

13. Sri Rama, who vanquished the horde of wicked, proud and impassioned enemies, got tired while walking through the forest and approached the self-controlled Sage Bharadwaja.

(*Reverse*)

Satyabhama did not utter a word to Sri Krishna out of anger nor did she listen to the utterances of Sri Krishna. But Satyabhama became immensely pleased with Sri Krishna when He told her that He would undertake the burden of bringing the great Parijatha tree and started to converse with Him.

14. Sri Rama who had valorous splendour like the Kubera and who had the distinction of vanquishing the big array of demons (Rakshasas), with his faultless gait, reached the region known as Chitrakuta, which was like the heaven, where the cool breeze was being wafted along.

(*Reverse*)

The cloud hued Sri Krishna, as an atonement to the displeasure caused to Satyabhama, started on a pilgrimage to the 'Swarga'—the heavenly abode of the God, which possessed an auditorium adorned by Rambha and others, to bring the Parijatha tree of divine pleasure.

15. The self-controlled Rama, who had overcome Bhargava Rama (Parsurama) the destroyer of the big line of Kshatriyas, reached the Dandaka

forest. Rama, the Lord attainable only by the Nitya Suris, by having taken the human form also became attainable to the ordinary mortals of the world.

(*Reverse*)

The great leader, the possessor of remarkable magnificence, Sri Krishna, reached the Nandavana - the celestial garden, which gave supreme pleasure to Indra.

**16.** The faultless Rama, the enemy of ignorance, wearing the dress of bark, killed Viradha, the tormentor of all beings. Then Sri Rama went to Sage Agastya, whose voice was resounding with the Vedic hymns.

(*Reverse*)

Indra, the bestower of water to the earth and who was enjoying the pleasure of hearing different kinds of music and who possessed valour capable of vanquishing the asura (demon) named 'Jambha', got frightened on hearing the news of arrival of Sri Krishna in the Swarga.

**17.** Sri Rama, the protector of the sages immersed in the lore of the Vedas, was adored by Jatayu. Sri Rama was then implored by Surpanaka, the ugly sister of Ravana for his union.

(*Reverse*)

Lord Sri Krishna uprooted the Parijatha tree on Indra's refusal to part with it. Consequently, Indra, though a friend of Krishna, made up his mind to fight with Him.

**18.** Lakshmana, the lieutenant and aid of Sri Rama, and the dauntless, cut the nose of Surpanaka. The demonic Surpanaka, who had lost her nose, vowed vengeance on Rama, the descendant of the God Sun.

(*Reverse*)

Indra, who overwhelmed the Asuras, and who was surrounded by the Gods and who had smothered the mountains, and who had his splendour and valour slighted, addressed Sri Krishna with polite words.

**19.** Though Sri Rama destroyed the demon 'Khara' and his army after a bitter fight, he was unostentatious and remained unscathed. His fame spread far and wide (reached the farthest corners of the earth and the heaven.)

(*Reverse*)

'Oh! Sri Krishna! Possessor of prowess capable of destroying the valour of the Gods, You who have celestial bird (Garuda) as your conveyance; dispenser of wealth, please do not carry the celestial tree Parijatha to the earth.'

**20.** Ravana, the Lord of Lanka, who was surrounded by Rakshasas, the wicked and mean, made up his mind to conquer Sri Rama, who had destroyed the horde of demons.

(*Reverse*)

Indra, the Lord of the Gandharvas and who was shining just like the God Sun, became afflicted with

sorrow—the sorrow, which has the sickening effect of blunting the sense of discretion—and ordered the capture of Sri Krishna.

**21.** Sri Rama, the utterance of whose name makes one rid of all sins, shone brilliantly by killing Maricha, the son of Tataka. Sita, without her Lord, lost her composure and became protectorless (destitute).

(*Reverse*)

Indra, who could destroy the wings of the mountains and could overcome Pradyumna, with the rain of his arrows, could not follow Sri Krishna, who accompanied by Pradumna, was wandering around the abode of Gods, the Swarga.

**22.** The adorable Vaidehi (Sita), who was an incarnation of Goddess Lakshmi, was carried away by the deceitful and mean-minded Ravana.

(*Reverse*)

Pradyumna was defeated by Indra, who was desirous of protecting the frightened and fleeing Gods and who was aided by the Brahmin named Pravara. (Pradyumna fell down unconscious.)

**23.** Sri Rama, who was shining like the beautiful cloud, and who was separated from his wife, was met by the faultless son of Vayu—Sri Hanuman. The consort of Ruma, Sugriva, who had lost his power and fame and had thereby lost all his happiness, met Sri Rama.

(*Reverse*)

The youthful Pradyumna, who was overcome by the Gods, regained his conscience as the cold breeze blew over him and became his active self. He struck at the enemies and vanquished them and became praiseworthy.

**24.** The lotus-eyed Sri Rama, whose splendour was adored by the splendour of God Sun, killed Vali, the son of Indra.

(*Reverse*)

Sri Krishna, who had belittled the splendour of Sun with his own splendour, and who had slighted the prowess of Iswara, protected Garuda, his devotee, who with the breeze born out of his wings, was wreaking havoc on the enemies.

**25.** In Sri Rama was born a new kind of magnificent splendour, which derived its strength from the invincible army provided by Sugriva. The glorious victory (Jaya Lakshmi) which presaged cutting off the head of Ravana, came to Sri Rama.

(*Reverse*)

Sri Krishna, who was capable of enduring the onslaught of an array of missiles, was approached by victory (Jaya Lakshmi), who had natural splendour of her own and had vanquished the Gods. (Sri Krishna defeated the Gods in the battle.)

**26.** Sri Rama, the renowned protector whose valour had excelled the valour of Indra, and who did not tolerate the glory of the Asuras met the famed

Sri Hanuman, who had crossed the ocean, and shone brightly as he reached the Sahyadri and the shore of the ocean.

(*Reverse*)

Sri Krishna, who was much pained at the attack directed by Indra towards Pradyumna, gained victory and secured the Parijatha tree, the pride of the abode of Gods - Swarga.

**27.** Sri Rama glowed brightly protecting the army of the valorous monkeys, which was treading its path on the newly built bridge across the ocean, which presented an obstacle in the form of vast sheet of water and with innumerable creatures under water.

(*Reverse*)

A man who praises Sri Krishna is blessed with the power to defeat the enemies. He who does not praise Sri Krishna not only becomes possessed with defeat but also loses all his lustre. Sri Krishna, got hold of the Parijatha tree,

**28.** Sri Rama who dealt a fatal blow to the adventurous and valorous Ravana, the Lord of Lanka, secured his consort Sita, the daughter of Mother Earth; Sri Rama, who warded off the sorrow of Vibhishana, was adored by all the Gods.

(*Reverse*)

With the welfare of Pradyumna, who struck at the Gods, in view, Sri Krishna very quickly shattered the

foes in the Swarga, which boasted of Iravatha (the elephant). The victorious Krishna thus merited the praise and returned to the earth.

29. The City of Ayodhya became the fitting abode of Sri Rama the opponent of Ravana, with its magnificent and attractive mansions surrounded by cocoanut trees.

(*Reverse*)

The best city of Dwaraka, the abode of victorious elephants, glowed with the divine tree Parijatha and Sri Krishna, who disported with the Gopis in the full moon-lit nights.

30. The lotus-seated Lakshmi entered the opulent and bright city of Ayodhya. The victor (of foes) Rama acquired the great wealth of Kingdom.

(*Reverse*)

The Parijatha with the unfading flowers found a foothold in the threshold of Satyabhama. With the lustre shed by the divine flower, Satyabhama, appeared to shine more brightly, and pleased with the celestial gift, she sported with Lord Sri Krishna.

हरे राम हरे राम राम राम हरे हरे ।

हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥

---

Hindi Prachar Press, Madras 17